येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसंभवाः । तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् ॥ २१
पश्यतां सर्वदेवानां स्वान्पितॄन्प्रतिपेदिरे । तथा ब्रुवति देवेशे गोप्रतारमुपागताः ॥ २२
भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः । अवगाह्याप्सु यो यो वै प्राणांस्त्यक्त्वा प्रहृष्टवत् ॥ २३
मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत । तिर्यग्योनिगतानां च शतानि सरयूजलम् ॥ २४
संप्राप्य त्रिदिवं जग्मुः प्रभासुरवपूंषि तु । दिव्या दिव्येन वपुषा देवा दीप्ता इवाभवन् ॥ २५
गत्वा तु सरयूतोयं स्थावराणि चराणि च । प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् ॥ २६
तस्मिन्येऽपि समापन्ना ऋक्षवानरराक्षसाः । तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि ॥ २७
ततः समागतान्सर्वान्स्थाप्य लोकगुरुर्दिवि । हृष्टैः प्रमुदितैर्देवैर्जगाम त्रिदिवं महत् ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

---

एकादशोत्तरशततमः सर्गः ।

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम् । रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम् ॥ १
ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथा पुरा । येन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ २
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । नित्यं शृण्वन्ति संहृष्टाः काव्यं रामायणं दिवि ॥ ३
इदमाख्यानमायुष्यं सौभाग्यं पापनाशनम् । रामायणं वेदसमं श्राद्धेषु श्रावयेद्बुधः ॥ ४
अपुत्रो लभते पुत्रमधनो लभते धनम् । सर्वपापैः प्रमुच्येत पादमप्यस्य यः पठेत् ॥ ५
पापान्यपि च यः कुर्यादहन्यहनि मानवः । पठत्येकमपि श्लोकं पापात्स परिमुच्यते ॥ ६
वाचकाय च दातव्यं वस्त्रं धेनुर्हिरण्यकम् । वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः ॥ ७

दयः । ऋक्षा जाम्बवदतिरिक्ताः स्विकां स्वीयां योनिं देवयोनिं स्वस्वदेवरूपं ययुः ॥ २० ॥ उक्तमेवार्थं स्पष्टयति—येभ्य इति । सुरेभ्य इत्युपलक्षणम् । येभ्यो देवर्ष्यादिभ्यो ये विनिःसृतास्ते सुरसंभवाः स्वपितॄन्प्रतिपेदिरे । तेषु मध्ये सुग्रीवः सूर्यमण्डलं प्रविविशे । अत्र ययुः प्रतिपेदिरे इति निर्देशो भविष्यदर्थे । 'अवतीर्य समीकृत्य स्वांशान्स्वीकुर्वते पुनः' इति शास्त्रात् । उक्तार्थमुपसंहरति—तथेति । देवेशे पितामहे तथोक्तवति । आगच्छ प्रविश स्विकां तनुमित्युक्तवति इत्यर्थः । गोप्रतारं गोप्रताराख्यं तीर्थं सारवमुपागताः सन्तः सर्वे हर्षपूर्णाश्रुविक्लवा आनन्दजाश्रुपूर्णतया विक्लवेक्षणाः सरयूं भेजिरे । अथ यो यः प्राणी तदा सरयूजलमवगाह्य हृष्टवद्धृष्ट आसीत्स मानुषं देहमुत्सृज्य विमानमध्यरोहत । तिर्यग्योनिगतानां शतान्यनेकानि सरयूजलं तदवगाहं प्राप्य प्रभासुराणि वपूंषि येषां तादृशानि भूत्वा त्रिदिवं जग्मुः । दिव्या दिव्यवपुषः सन्तो दिव्येन वपुषा दीप्ता देवा इवाभवन् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अथ स्थावराणि चराणि च पश्वादीनि सरयूतोयं गत्वा तत्तोयविक्लेदं प्राप्य तत्तोयमज्जनं प्राप्य देवलोकमुपागमन् । कल्पवृक्षकामगव्यादिस्वरूपं प्रापुरित्यर्थः ॥ २६ ॥ तस्मिन्सरयूजले समापन्नास्त्यक्तदेहास्तेऽपि सर्वे एतान्देहानम्भसि निक्षिप्य स्वर्गं संतानकलोकरूपं विविशुः ॥ २७ ॥ ततः समागतान्दिव्यैर्देहैरन्तरिक्षे स्वसमीपं प्राप्तान्दिवि तत्तदुचितस्वर्गे स्थापयित्वा स्वयं भगवदागमनाद्धृष्टैर्देवैः सह महत्त्रिदिवं स्वलोकं जगाम ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

अथ तत्काव्यफलोपदेशः—एतावदिति । सोत्तरमुत्तरकाण्डसहितम् । ब्रह्मणा चतुर्मुखेन भगवदवतारचरितविषयत्वात्पूजितम् । किंच ब्रह्मभिर्ब्रह्मर्षिभिः पूजितम् । ब्रह्मणा स्वयं प्रवर्त्य वाल्मीकिना कारितत्वात्सर्वाख्यानेभ्यः प्रशस्तं रामायणमिति ख्यातम् । 'परानन्दमयो रामो लभ्यते श्रवणादिभिः । अतोऽस्य चाभिधा पुण्या रामायणमितीरिता ॥' वाल्मीकिना कृतमेतदाख्यानमेतावदेव एतावच्छ्लोकसर्गकाण्डसंख्याकमेव । न न्यूनं नाधिकमित्यर्थः ॥ १ ॥ अथ पूर्वसर्गवृत्तानुवादपूर्वं काव्यस्यापवर्गान्तसाधकत्वेन श्रोतव्यार्थत्वप्रतिपादनम्—तत इति । ततो भक्तजनस्य स्वर्गप्रापणानन्तरं स्वयमपि विष्णुरुपेन्द्रत्वं प्राप्तः । स्वर्गलोके उपेन्द्रलोके यथा पुरा यथापूर्वं प्रतिष्ठितः । एवं तर्हि सपरिच्छेदः किं स नेत्याह—येनेति । येन सचराचरं सर्वं त्रैलोक्यं जगदुपादानत्वेन व्याप्तम् । स्वर्गप्रतिष्ठितत्वं तु मनुष्यदेहधारणवन्मायिकमिति भावः ॥ २ ॥ ततोऽस्य काव्यस्य जगदुपादानकारणावतारचरित्राख्यानत्वतो देवादयोऽपि दिव्यं रामायणं दिवि शृण्वन्ति ॥ ३ ॥ यत एवमतः—इदमाख्यानमायुष्यमिति । श्रुतं पठितं च सदायुर्जनकमित्यर्थः । सौभाग्यं सौभाग्यवर्धनम् । वेदसमम् । वेदवद्ब्रह्मविषयत्वेऽपि पौरुषेयत्वेन वेदतः किंचिन्न्यून-

एतदाख्यानमायुष्यं पठन्रामायणं नरः । सपुत्रपौत्रो लोकेऽस्मिन्प्रेत्य चेह महीयते ॥ ८
रामायणं गोविसर्गे मध्याह्ने वा समाहितः । सायाह्ने वापराह्ने च वाचयन्नावसीदति ॥ ९
अयोध्यापि पुरी रम्या शून्या वर्षगणान्बहून् । ऋषभं प्राप्य राजानं निवासमुपयास्यति ॥ १०
एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम् । कृतवान्प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकादशोत्तरशततमः सर्गः ॥ १११ ॥

## इति श्रीरामायण उत्तरकाण्डं समाप्तम् ।

मित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ लोकेऽस्मिन्महीयते इत्यर्थः । प्रेत्य मरणोत्तरमपि । इह च, चात्परलोके, इह लोके च महीयते । इह लोके पूजा च कीर्त्यविच्छेदात् ॥ ८ ॥ ९ ॥ ततः परमयोध्या केन रूपेण स्थितेति शङ्कानिवृत्तये भविष्यद्वृत्तान्तरमाह—अयोध्यापीति । रम्या अयोध्यापुर्यपि बहून्वर्षगणाञ्छून्या सती कालान्तर ऋषभं राजानमवाप्य निवासं जनाश्रयत्वमुपयास्यति । अत्र कतकः—एवं चायोध्याविषयेऽभिषिक्तेन भरतेनायोध्यादेशो नन्दिग्रामे स्थित्वैव रक्षित इति द्रष्टव्यमिति । तत्र मानं चिन्त्यम् । 'शतेन च शपे राजन्स्वर्गलाभेन चैव हि । न कामये यथा राज्यं त्वां विना रघुनन्दन ॥' इति पूर्वभरतोक्त्या विरुद्धं च । तथा 'भरतश्चापि शत्रुघ्नस्तयोर्दारा उभे शुभे । राघवस्यानुगमने निश्चितार्थाः समाययुः ॥ राघवस्तु चतुर्बाहुरभूत्तस्य कराब्जयोः । उभौ भरतशत्रुघ्नौ शङ्खचक्रौ बभूवतुः ॥' इति पाद्मविरुद्धं चेत्यन्ये ॥ १० ॥ एतदिति । सभविष्यं भगवद्यानानन्तरं भगवदयोध्यावृत्तान्तकथनसहितम् । सहोत्तरमेतावदेतदाख्यानमित्यतः प्राक्तनोत्तरकाण्डसहितम् । प्रचेतसः पुत्रो वाल्मीकिः । एतद्रामायणाख्यानं कृतवान् । प्रचेतसः पुत्र इत्यक्षराधिक्यमार्षत्वात् । तद्ब्रह्मा हिरण्यगर्भोऽप्यन्वमन्यत सत्यशब्दतया वेदोपबृंहणतया सर्वार्थसाधकतया चाङ्गीकृतवानिति सर्वेष्टसिद्धिः ॥ ११ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकादशोत्तरशततमः सर्गः ॥ १११ ॥

निर्मलं कतकक्षोदादपि रामायणाम्बुधिम् ।
अत्यन्तं निर्मलं चक्रे रामः स्वमतिवाससा ॥
रामो रामायणाम्भोधौ सेतुं कृत्वा सुविस्तृतम् ।
पाखण्डिरक्षोवकाणि ध्वस्तवान्साधुतोषकः ॥
उत्तरान्तैः सुवर्णिते निषेधावधिके परे ।
सप्तमे राघवे रामे रतिरस्तु चिदात्मके ॥

---

## इति श्रीरामायणं समाप्तम् ।

# विषयसूची ।

